॥ श्रीः ॥

# ...न्वयवर्णनम्

नाम

## ...डकाव्यम् ।



अर्थात्

...मदार्यकुलकमलदिवाकराणां मेदपाटदेशाधिपतीनां महाराणावर्याणां वंशवर्णनम् ।

ज्योतिर्वेदविदा काशीवासिना वेतालोपाख्येन

**श्रीनाथशास्त्रिणा**

प्रणीतम् ।

तदनुजनुषा दूधविनायक–वाराणसी वास्तव्येन

**अनन्तरामशास्त्रि वेतालेन**

प्रकाशितम् ।

श्रीकाश्यां हितचिन्तकनाम्नि यन्त्रालये रामघट्टे;
बी. एल्. पावगीद्वारा मुद्रितम् ।

श्रीसंवत् १९७९ गङ्गासप्तम्याम्

प्रथमावृत्तिः ५००



# समर्पणम् ।

रघुकुलकमलदिवाकरभूपश्रीपू॰फतहसिंहवर्मभ्यः ।
उदयान्वयवर्णनमिदमत्यनुरागादुपायनी क्रियते ॥
श्रीमत्करतपनीये रत्नसमानं विभातु काव्यमिदम् ।
इत्यार्ययाऽऽर्यवर्याः प्रार्थ्यन्ते कुशलचिन्तकेन मया ॥

श्रीमताम्

श्रीपू॰ विनायकशास्त्रितनूजनिः

श्रीनाथशास्त्री वेतालः ।






# भूमिका.

संसारघोरसागरतुङ्गतरङ्गाकुलान्तरङ्गाणाम् ।
कलिमलविदलनकुशलो विलसतु हृदये सदैकलिङ्गो वः ॥
दाता निजैकमनसा मनसापि समीहितं फलं सकलम् ।
विपुलं कुशलं सविता सविता स सदा दयामयः पायात् ॥

०

हंहो ! ललितकवितावनिताकलाविलासाऽवलोकनकुतूहलाऽऽकुलितहृदयाः सहृदयाः ! क्षणमितोऽपि चक्षुषां दानेन सविनयं मदीयं निवेदनमिदमवहितेन मनसा रसान्निशमयन्तु तत्रभवन्तो भवन्तः—यथा किलाऽद्यत्वे काले विलोक्यते जगति जागरूकोऽयं सर्वतो नियमः, यत् शशिना विनेव निशा, पौरुषमन्तरेव पुरुषः, कलाकौशलविकलेव कान्ता, भूमिकया विना ग्रन्थो न तादृङ्मनोविनोदमावहति सुमनसाम् । तत्त्वतस्तु पर्यालोचनया युक्तियुक्तमेव विभात्येतत् । यतो हि सा ग्रन्थस्य सारभूतं विषयं प्रदर्श्य कवेरन्तर्गतमाशयं प्रकाशयति । तेन काव्यस्य रस इव सा ग्रन्थस्याऽऽत्मभूतेति निर्विवादमङ्गीकार्यमेव सर्वैः ।

किन्तु सा कीदृशी कथङ्कारं लेख्येति दोलायमानमानसोऽप्यहं पूर्वोक्तनियमानुसारं तस्या आवश्यकतां विचारयन् संक्षेपतस्तस्या विलेखनपथमवतरामि । आशासे च पाठकहंसाः स्वल्पेनैव बहु विज्ञाय पुरोभागितां विहाय सारमादाय च गुणैकपक्षपातिनो भूत्वा धैयात्यं मम क्षाम्येयुः । विस्तरभयाच्च विस्तराद्विरमामीति ।

उदयपुरराजधान्यामास्माकीनः सामान्येतरो (घनिष्ठो) ऽस्ति सम्बन्धः । पूज्यवरश्री दमतिपतृचरणैर्मुख्यतया निजं जीवनसमयं श्री ५ मदार्यकुलकमलदिवाकरश्रीमहाराणावर्याणां सेवयैव यापयित्वा समुपार्जिता महती संमानना, तदीयकृपापात्रता च ।

मदीयपूज्याग्रज श्रीश्रीनाथशास्त्रिणां मनसि बहुतिथात्कालात्खेलन्नेष आसीदुत्साहः— यत्खलु स्वस्वामिनां जीवनदायिनां स्वल्पमपि गुणान्वर्णयेयम् । सममेव पूज्यपितृपादानां सम्बन्धश्च तत्रत्यं प्रकटयेयम् । परन्तु नाद्यावधि तदुपयोगिनी साहिती समासादिताऽभूत्, येन स उत्साहस्तेषां स्वस्थाने मनस्येव मनोरथोऽकिञ्चनानामिव विलीनतामनुभवन्नासीत् ।

ततश्च सहसा कुतश्चित्कारणवशात् तत्रोदयपुरपत्तने मदीयपूज्याग्रजानां गमनावसर उपस्थितस्तेन ते तं देशमलमकुर्वन् । तत्र च पुरा बीजरूपावस्थितः स उत्साहो निरायासमेव तदौपयिकसामग्रीसमासादनसलिलसेकेन निःसंशयमङ्कुररूपेण पर्यणमत् । ततश्च ग्रन्थस्यास्य रचनायां प्रावृतन् । परमेश्वरकृपापाङ्गपातेन सच तेषामाशयो निष्प्रत्यूहं पूर्णतामयासीत् ।

अथ कियता कालेन तत्रत्यकार्यजातादवकाशमवाप्य वाराणस्यामिहोपेत्य च श्रीमद्भ्रातृपादैर्निजनिर्मित "मुदयान्वयवर्णना" त्मकमिदं खण्डकाव्यं मत्पुरो न्यवेशि । मया च तदव-

लोक्य, आद्यन्तं प्रपठ्य च तत्रत्यप्रसादगुणालङ्कारचमत्कारिताञ्च बहुलमनुभूय सानन्दं तत्प्रकाशने सोत्साहेन प्रावर्ति । अस्तु तावत्—

सूर्यवंशीयानां वीरक्षत्रियाणां गुणानां चरितानाञ्च वर्णने को नाम चराचरेऽस्मिन् साभिमानो जनः फलेग्रहितामुपार्जयितुं शक्तः ? अतएव संक्षिप्य संक्षिप्य वर्णनमत्र दरीदृश्यते । उदयपुरे स्वसम्बन्धेन तदवस्थापयितुः श्रीमदुदयसिंहादेव समुपक्रान्तोऽयं ग्रन्थः । किञ्च—

सर्वेषामुदयसिंहप्रमुखानां महाराणानां केवलं नामग्रहणमेवोद्दिश्य ग्रथितोऽयं ग्रन्थः श्रीमता भ्रातृवर्येण । अद्य किल श्रीमदेकलिङ्गानुकम्पया समुचितसामग्रीसमासादनेन पूज्याग्रजहृदयाऽऽलवालविलसिता सकलाभिलाषवल्ली चिराय सफलाऽभवदिति महदिदं सम्मदस्य स्थानम् ।

तदहं श्रीमद्भ्रातृवराणां निदेशमनुपालयन् ग्रन्थमिमं भूमिकया संयोज्य समीचीनतया संशोध्य च तदीयाऽऽशयप्रचिकाशयिषया सप्रकाशं मुद्रापयितुमुद्यतोऽस्मि संप्रति ।

तदिह यदि यन्त्रालयदोषात् मदीयमतिमान्द्यादनवधानतया वा मनुष्यभावसुलभानि स्खलितानि पाठकानां नयनपथमुपेयुस्तर्हि तानि संशोध्य पठेयुरित्यभ्यर्थयमानो वो विरमामि व्यापारादमुष्मादिति शम् ।

काशी
गङ्गासप्तमी
सं० १९५९.

श्रीमताम्
अनन्तरामशास्त्री
वेतालः

श्रीमत्सु ..........................................

..........................................

महोदयेषु

सविनयं सप्रेम समर्प्यते



..................

संवत् १९.
ता. / / ई०

श्रीकाशीनिवासिना
वेतालोपनाम्ना
श्रीनाथशास्त्रिणा

॥ श्रीः ॥

✻ श्रीगणेशाय नमः ✻

॥ श्रीमदेकलिङ्गाय नमः ॥

॥ श्रीगुरुचरणकमलेभ्यो नमः ॥

# उदयान्वयवर्णनम् ।

विनायकं प्रणम्यादौ श्रीगुरुं मूर्ध्नि संस्थितम् ॥
हृत्पङ्कजे च संस्थाप्योदयवंशोऽनुवर्ण्यते ॥ १ ॥
अस्ति भूतलविख्यातश्चित्रकूटाभिधो गिरिः ॥
यो भानुकुलभूपालकीर्तिध्वज इवोच्छ्रितः ॥ २ ॥
मेदपाटभुवो रत्नं घनवृक्षविराजितः ॥
लतामण्डलसङ्कीर्णो बहुगह्वरसंयुतः ॥ ३ ॥
वापीकूपतडागादिजलाशयसमन्वितः ॥
नानापक्षिसमाकीर्णः स्रोतोभिः समलङ्कृतः ॥ ४ ॥
जनसंहतिसङ्कीर्णो भूरिग्रामप्रशोभितः ॥
गुरुग्रावप्रसन्नद्धचारुप्राकारवेष्टितः ॥ ५ ॥
सर्वदा सलिलाऽऽपूर्णविशालपरिखावृतः ॥
अभेद्यः शत्रुनिवहैः सम्राड् भूदुर्गसंहतेः ॥ ६ ॥
भानुवंश्याः पार्थिवेन्द्राः समरे कालसन्निभाः ॥
अकुर्वन् राजधानीं स्वां यस्मिन्नतिमनोहराम् ॥ ७ ॥
यन्निमित्तं महायुद्धं तुमुलं लोमहर्षणम् ॥

अनेकवारमभवन्म्लेच्छभूपतिभिः सह ॥ ८ ॥
यस्य पश्चिमदिग्भागे महारण्यं विराजते ॥
हिंस्रश्वापदसङ्कीर्णे गिरिसंहतिमण्डितम् ॥ ९ ॥
नानावृक्षसमुल्लासिसमनिम्नोच्चभूमिकम् ॥
तीक्ष्णकण्टकभूयिष्ठं पृथुग्रावाचितं ततम् ॥ १० ॥
इत्थं दुरध्वे वस्विन्दुगव्यूतिप्रमितेऽन्तरे ॥
अतीव भासुरं रम्यं राजते नगरं महत् ॥ ११ ॥
उदीच्यामस्य गव्यूतिसार्धत्रयमितेऽध्वनि ॥
परितो गिरिसङ्कीर्णे नृत्यद्बर्हिनिनादितम् ॥ १२ ॥
सत्फलोत्फुल्लसद्वृक्षनिकुरम्बकरम्बितम् ॥
भ्रमद्भ्रमरसंरावमुखरीकृतदिङ्मुखम् ॥ १३ ॥
स्रवन्निर्झरपानीयक्लिन्नभूमिसमन्वितम् ॥
मेदपाटभुवः पूज्यं देवस्थानं विराजते ॥ १४ ॥
एकलिङ्गाभिधमिदं पुण्यं धाम चमत्कृतम् ॥
यत्र स्वयंभूर्गिरिशो लिङ्गरूपेण राजते ॥ १५ ॥
देशस्यास्य क्षितिभृतो निजमन्त्रित्वपूर्वकम् ॥
राजत्वेन चिरात्कालात्सदा व्यवहरन्ति यम् ॥ १६ ॥
अस्तापदः प्रत्नन्नृपाः शरण्यं यं यदाऽव्रजन् ॥
तदैवापन्नाशपूर्वं प्राप्नुवन् सुखमुत्तमम् ॥ १७ ॥
त्रिकालपूजनं यत्र महासम्भारपूर्वकम् ॥
रुद्राभिषेकसहितं भवत्येव निरन्तरम् ॥ १८ ॥
देवताया यथाकालं शयनोत्थापने तथा ॥

नानापक्वान्नसहितं नैवेद्यं साधुदुग्धयुक् ॥ १६ ॥
आरार्तिकं च वादित्रशङ्खभेरीस्वनैर्युतम् ॥
पुष्पाञ्जलिस्तथैवोच्चैर्वेदमन्त्रपुरःसरः ॥ २० ॥
भवत्येवं प्रतिदिनं भक्त्या शम्भोः समर्चनम् ॥
सचैकलिङ्गो भगवान् त्रातुं देशमिमं श्रितः ॥ २१ ॥
दिनकरकुलभूषाभूतभूपेन्द्रवृन्दा-
ऽभिमतफलवदान्यो भूतिमानेकलिङ्गः ॥
जयति यदनुकम्पामात्रतो मेदपाटा-
ऽधिपतय इह शौर्यं दर्शयन्तः प्रसिद्धाः ॥ २२ ॥

इत्युदयान्वयवर्णने खण्डकाव्ये प्रथमखण्डम् ॥

---

## अथ द्वितीयखण्डम् ।

श्रीमानुदयसिंहाख्यो धर्मात्मा सत्यसङ्गरः ॥
पुराऽभवद्भानुवंशमणिः क्षत्रियपुङ्गवः ॥ १ ॥
पुरा प्रोक्तं महारण्यस्थितं यन्नगरोत्तमम् ॥
तदिदं सुन्दरतमं पिछौलानदरोधसि ॥ २ ॥
स्थापयित्वोदयपुरेत्येवं नाम विधाय च ॥
अवात्सीत्स्वजनैः सार्धं तत्र रम्ये पुरे चिरम् ॥ ३ ॥
किंच क्रोशमितायामं नाम्नाचोदयसागरम् ॥
बहुग्रादोभिराकीर्णं पुलिनैश्च विराजितम् ॥ ४ ॥
नानानोकहसंशोभिकूलद्वयसुशोभितम् ॥
हंसकारण्डवाकीर्णं चक्रवाकैश्च सेवितम् ॥ ५ ॥

उत्फुल्लाम्भोजसंशोभिस्वच्छनीरपरिप्लुतम् ॥
मधुपानमदोन्मत्तगुञ्जद्भृङ्गसमाकुलम् ॥ ६ ॥
किन्तु वृन्दं स्वयशसां किमु वा केतनं पुरः ॥
स्वपत्तनाम्नातिदूरे नदश्रेष्ठं व्यधत्त यः ॥ ७ ॥
वत्सरेऽश्वाङ्कबाणेन्दौ राज्यं प्राप्य क्रमागतम् ॥
एकत्रिंशत्समाः सम्यक्पालयामास यः प्रजाः ॥ ८ ॥
तस्य सूनुः प्रतापाख्योऽन्वर्थनामा नृपोऽभवत् ॥
महाबलो महोत्साहः शत्रुभिः स्तुतविक्रमः ॥ ९ ॥
तेजस्वी परमोदारो धीरः सत्यपरायणः ॥
प्रजाभक्तः क्लेशसहो दीनानां परिपालकः ॥ १० ॥
लोकमान्यो विप्रसाधुगोभक्तो विजितेन्द्रियः ॥
धर्मैकतानो योगज्ञो दानी मानी विचक्षणः ॥ ११ ॥
स्वल्पेनापि स्वसैन्येन यो म्लेच्छोन्मूलनक्षमः ॥
अनेकवारमजयत्सङ्गरे यवनान् बहून् ॥ १२ ॥
तात्कालिका भूपतयो भिया यवनभूभुजः ॥
अनुज्ञां शिरसा सम्यगुररीचक्रुरञ्जसा ॥ १३ ॥
एकएव महामानी क्षात्रतेजोविराजितः ॥
प्रतापभूपतिर्येन यवनाधिपतेः पुरः ॥ १४ ॥
न कदापि स्वोत्तमाङ्गं नमितं मनसाऽप्यहो ॥
लोकेऽद्यापि स्तूयतेऽसौ मानी नृपतिपुङ्गवः ॥ १५ ॥
यशोदयपुराभिख्यं तातसंस्थापितं पुरम् ॥
तदनेनोन्नतिमता महोन्नतिमवापितम् ॥ १६ ॥

मेदपाटमहीराजधानीकृतमिदं पुरम् ॥
अद्यापि वासवपुरप्रतिस्पर्धीव राजते ॥ १७॥
वीरः प्रतापसिंहोऽसौ पुत्रवत्पालयन् प्रजाः ॥
पञ्चविंशतिवर्षाणि राज्यभारमबीभरत् ॥ १८ ॥
पश्चादमरसिंहाख्यो महाशूरः प्रतापजः ॥
बहूनि राजभवनान्यकरोद्यः क्षमापतिः ॥ १९ ॥
म्लेच्छेन्द्रेण समं सप्तदशवारं मुहुर्मुहुः ॥
अभवद्यस्य सङ्ग्रामस्ततः सन्धिरभून्मिथः ॥ २० ॥
अथोविंशतिवर्षाणि कीर्त्या परमया युतः ॥
मेदपाटस्य सुदशां कुर्वन् राज्यं चकार यः ॥ २१ ॥
ततः करणसिंहाख्यः क्षितीशो बुद्धिसागरः ॥
बहूनि येन स्थानानि कृतानि रुचिराण्यपि ॥ २२ ॥
चित्रकूटमहादुर्गपरिखां यो व्यधादिह ॥
पिछौलाकूलभित्तेश्च जीर्णोद्धारं तथाऽकरोत् ॥ २३ ॥
खुर्मराख्यो महाशूरो यवनाधिपतेः सुतः ॥
भ्रातरं परवेजाख्यं ज्येष्ठं हत्वा भ्रमन् बहु ॥ २४ ॥
भयव्याकुलितः कर्णसिंहं शरणमाश्रितः ॥
सोऽपि शत्रुसुतायाऽस्मै दयालुरभयं ददौ ॥ २५ ॥
योऽष्टसंमितवर्षाणि तन्वन् निजयशः सितम् ॥
राज्यं चकार भूपेन्द्रः प्रजाः सन्तोषयन् सदा ॥ २६ ॥
ततः श्रीमान् जगत्सिंहो मतिमानभवन्नृपः ॥
स्थानानि सुन्दरतराण्यकरोद्यो बहून्यपि ॥ २७ ॥

यश्चित्रकूटदुर्गस्य प्राकारो रिपुखण्डितः ॥
तस्य जीर्णोद्धारमसावकरोद्बहुभिर्धनैः ॥ २८ ॥
पिछौलानदमध्ये च शोभनं वेश्म यो व्यधात् ॥
शोभतेऽद्यापि तच्चारु जगन्मन्दिरनामकम् ॥ २९ ॥
यश्चोदयपुरे विष्णोर्विदधे मन्दिरं वरम् ॥
नगरस्योच्चभूभागे यच्च राजति संप्रति ॥ ३० ॥
पृथुपाषाणसुदृढं विपुलान्तरशोभितम् ॥
भिनत्ति शिखरैर्नाकं जगदीशाभिधं च तत् ॥ ३१ ॥
एतत्कृतं काशिकायां राणामहलसंज्ञकम् ॥
गङ्गातीरे सुविपुलं शोभते स्थानमुत्तमम् ॥ ३२ ॥
षड्विंशतिमितानीह वर्षाण्येष क्षमापतिः ॥
संपालयन्निजं राज्यमवाप यश उत्तमम् ॥ ३३ ॥
ततोऽभूद्राजसिंहाख्यो नृपः शूरशिरोमणिः ॥
जित्वा म्लेच्छपतिं तस्माद्देशमेकं य आच्छिनत् ॥ ३४ ॥
सम्प्राप्ते बहुदुर्भिक्षे हाहाकारपरे जने ॥
एकलक्षोनकोटिंयो रूप्यकाणि स्वकोषतः ॥ ३५ ॥
व्ययीकृत्य नदं चक्रे पालयन् सकलाः प्रजाः ॥
स च राजसमुद्राख्यो राजते सागरोपमः ॥ ३६ ॥
अनर्घपाषाणचितः सार्धक्रोशमितायतिः ॥
प्रदक्षिणेन षट्क्रोशमितो वर्वर्ति शोभनः ॥ ३७ ॥
यवनाधिपतिः कृष्णगढभूपतिकन्यकाम् ॥
गुणरूपवतीं रम्यामभूदुद्वोढुमुत्सुकः ॥ ३८ ॥

निजधर्मत्राणहेतोस्तयाऽसौ शरणीकृतः ॥
तस्मादस्याऽभवद्युद्धं म्लेच्छाधिपतिना सह ॥ ३९ ॥
अन्ते श्रीराजसिंहेन यवनेशं विजित्य तम् ॥
परिणीता च सा कन्या यथाविधि सुसंस्कृता ॥ ४० ॥
श्रीनाथद्वारकाधीशस्थानगोस्वामिपुङ्गवान् ॥
इतस्ततो म्लेच्छभयाद्भ्रमतस्तान् विलोक्य यः ॥ ४१ ॥
स्वदेशे शोभनं स्थानं तेभ्यो वासाय दत्तवान् ॥
स्थानसंरक्षणं चापि भक्तियुक्तः सदाऽकरोत् ॥ ४२ ॥
सप्तविंशतिवर्षाणि राज्यं शासन्नृपोत्तमः ॥
प्रीतिपात्रमभूद्भूरि प्रजानां स्वगुणादिह ॥ ४३ ॥
ततः श्रीजयसिंहाख्यो राजा राजकलान्वितः ॥
यस्य सन्धिरभूत्साकं यवनेन्द्रेण शाश्वतः ॥ ४४ ॥
महानदं यो विदधे जयसागरनामकम् ॥
गव्यूतियुगलायामं सार्धगव्यूतिविस्तृतिम् ॥ ४५ ॥
एकोनविंशतिसमाः स्वं राज्यं पालयन् मुदा ॥
तोषयँश्च प्रजाः सर्वाः कीर्तिं लेभे मनोहराम् ॥ ४६ ॥
अभूदमरसिंहाख्यो द्वितीयः पार्थिवस्ततः ॥
वर्षद्वादशकं यावद्यो राज्यं पालयन् स्थितः ॥ ४७ ॥
ततः सङ्ग्रामसिंहाख्यो नृपो बुद्धिमतां वरः ॥
नीतिज्ञश्च महोदारो राज्यकर्मसु पेशलः ॥ ४८ ॥
वृथा द्रव्यव्ययं यश्च नाऽणुमप्यकरोत् क्वचित् ॥
द्वाविंशतिसमाः प्राज्यं राज्यमेष व्यधान्नृपः ॥ ४९ ॥

ततः श्रीमान् जगत्सिंहो द्वितीयः पार्थिवोऽभवत् ॥
पिछौलाख्यो नदश्रेष्ठो येनाकारि सुसंस्कृतः ॥ ५० ॥
कान्तं जगन्निवासाख्यं तत्र हर्म्यं च निर्ममे ॥
तथैव शोभतेऽत्यर्थमधुनाऽपि तदुन्नतम् ॥ ५१ ॥
पञ्चविंशतिलक्षेण मुद्राणां तदभूद् द्वयम् ।
अष्टादशसमाः सम्यगपालयत यो भुवम् ॥ ५२ ॥
ततः प्रतापसिंहाख्यो द्वितीयोऽभून्महीपतिः ॥
वर्षद्वयमितं यश्चाकरोद्राज्यमतन्द्रितः ॥ ५३ ॥
ततः श्रीराजसिंहाख्यो द्वितीयो भूपपुङ्गवः ॥
सप्तवर्षमितं राज्यं पालयामास धर्मवित् ॥ ५४ ॥
अरिसिंहेतिविख्यातस्ततोऽभून्नृपसत्तमः ॥
यश्चैकादशवर्षाणि पालयामास भूतलम् ॥ ५५ ॥
हंमीरसिंहश्च ततो भूपेन्द्रो गुणसागरः ॥
वर्षषट्कमितं राज्यमकरोद्यो भुवस्तले ॥ ५६ ॥
ततोऽभूद्भीमसिंहाख्यः कार्यदक्षो नृपोत्तमः ॥
सन्धिपत्रमभूद्यस्य वर्तमानाङ्ग्लभूभृता ॥ ५७ ॥
पञ्चाशन्मितवर्षाणि स्वप्रजा अनुरञ्जयन् ॥
पालयामास धरणीं दिगन्ते ख्यापयन् यशः ॥ ५८ ॥
जवानसिंहश्च ततो भूपोऽभूद्बुद्धिसागरः ॥
यश्चैकादशवर्षाणि चक्रे राज्यमतन्द्रितम् ॥ ५९ ॥
सर्दारसिंहनृपतिस्ततश्चाऽभूद्भुवस्तले ॥
चतुर्वर्षमितं राज्यं योऽकरोद्धर्मपूर्वकम् ॥ ६० ॥

दिनकरकुलभूषाभूतभूपेन्द्रवृन्दा—
ऽभिमतफलवदान्यो भूतिमानेकलिङ्गः ॥
जयति यदनुकम्पामात्रतो मेदपाटा-
ऽधिपतय इह शौर्यं दर्शयन्तः प्रसिद्धाः ॥६१॥

इत्युदयान्वयवर्णने खण्डकाव्ये द्वितीयखण्डम् ।

## अथ तृतीयखण्डम् ।

ततः सरूपसिंहाख्य उदभूद्भूतले नृपः ॥
धर्मस्तम्भः सत्यसन्धो यश्च गोद्विजपालकः ॥ १ ॥
पालयामास यो हूणान् देशत्रासभियाऽऽगतान् ॥
यस्याङ्गलराजेन समं मैत्री च सुदृढाऽभवत् ॥ २ ॥
रूप्यके येन च स्वस्मिन्नङ्कितं "दोस्तिलंधनम्" ॥
लोके सरूपशाहीति सा मुद्रा कथ्यते जनैः ॥ ३ ॥
श्रीराजसिंहभूपेन्द्रविहितोदयरूप्यकात् ॥
आणकैकाधिकं मूल्यं स्वमुद्राया विनिर्ममे ॥ ४ ॥
स रूप्यकोऽद्यापि राज्ये पात्यते तादृगेव हि ॥
लभ्यन्तेऽद्यापि विपणौ तस्य सप्तदशाऽऽणकाः ॥ ५ ॥
गोवर्धनविलासाख्यां गोशालां निर्ममेऽत्र यः ॥
यत्र स्वयं गवां सेवां विदधे भक्तिसंयुतः ॥ ६ ॥
स्वाऽऽवासहेतोस्तत्रैव विशालं च मनोरमम् ॥
विधाय वेश्म न्यवसत्स्वयं स्वजनसंयुतः ॥ ७ ॥

वैक्रमेऽङ्काङ्कवस्वेकमितेऽब्दे राज्यमास्थितः ॥
एकोनविंशतिसमाः पालयामास यः प्रजाः ॥ ८ ॥
ततः श्रीमान् शम्भुसिंहो नृपोऽभूद्धार्मिकः सुधीः ॥
विद्वद्भक्तः कीर्तिशाली साक्षाच्छम्भुरिवाऽपरः ॥ ९ ॥
यश्च विद्याऽभिवृद्ध्यर्थं पाठशालां मनोरमाम् ॥
महाराणास्कूलनाम्नीं संस्थाप्य निजपत्तने ॥ १० ॥
श्रीकाशीतः पण्डितेन्द्रं वेदशास्त्रविशारदम् ॥
पञ्चाननं व्याकरणे धर्मे धर्ममिवाऽपरम् ॥ ११ ॥
वेदान्तन्यायमीमांसासाङ्ख्ययोगविदां वरम् ॥
राजनीतिविदं काव्यसिन्धुमन्थनमन्दरम् ॥ १२ ॥
खगोलविद्यामर्मज्ञं दाक्षिणात्यं महाकुलम् ॥
वेतालोपपदं विप्रवर्यं नाम्ना विनायकम् ॥ १३ ॥
ससत्कारं समानीय गुणग्राही स भूपतिः ॥
तत्र विद्यालये प्रीत्या पदे मुख्ये न्ययोजयत् ॥ १४ ॥
निजराज्यसभायाञ्च बहुसंमानपूर्वकम् ॥
पश्यतिस्म नृपश्रेष्ठो धीमन्तं यं निरन्तरम् ॥ १५ ॥
ग्रहयोगं ग्रहानीकं ग्रहणं सूर्यचन्द्रयोः ॥
धूमकेतूद्भवं चाऽन्यच्चमत्कारि नभःस्थितम् ॥ १६ ॥
गोलविद्याविदा तेन धीमता राजसंसदि ॥
यथार्थसमयेनैव दर्शयित्वा निरन्तरम् ॥ १७ ॥
नृपश्रेष्ठाज्जनेभ्यश्च साधुवादपुरःसरम् ॥
प्रतिष्ठा प्रापि बहुशो वर्धमाना दिने दिने ॥ १८ ॥

स शम्भुसिंहभूपेन्द्रः पिछौलाकूलसन्निधौ ॥
सदनं रुचिरं शम्भुनिवासाख्यं व्यधान्नवम् ॥ १९ ॥
यच्छ्रेष्ठं राजसदनं चित्तासेचनकं नृणाम् ॥
देदीप्यमानमद्यापि वरीवर्ति सुशोभनम् ॥ २० ॥
बहूनि राजवर्त्मानि हर्म्याणि रुचिराणि च ॥
चित्राणि देवसद्मानि विदधे यः स्वपत्तने ॥ २१ ॥
मेदपाटभुवो येन जीर्णोद्धारः कृतो बहु ॥
राज्यप्रबन्धनियमश्चाऽकारि प्रतिभाजुषा ॥ २२ ॥
यश्च जी. सी. एस. आई. त्याख्ययाऽतिमनोज्ञया ॥
पदव्या भूषितः सम्यग्वर्तमानाङ्गभूभृता ॥ २३ ॥
स शम्भुसिंहनृपतिस्त्रयोदशसमाः क्षितौ ॥
प्रजाः सन्तोषयन् राज्यमकरोन्नीतिपूर्वकम् ॥ २४ ॥
ततः सज्जनसिंहोऽभूदन्वर्थः पृथिवीपतिः ॥
रूपे कामातिशायी यो मतौ वाक्पतिसन्निभः ॥ २५ ॥
दाने कर्णप्रतिस्पर्धी नीतावुशनसा समः ॥
शौर्ये मघवता तुल्यो गाम्भीर्ये सागरोपमः ॥ २६ ॥
श्रीविक्रमार्कनृपतेरासीत्संसदि या स्थितिः ॥
सैव सज्जनसिंहस्य सभायामप्यदृश्यत ॥ २७ ॥
भूयांसः पण्डिताश्चाऽऽसन् शास्त्रवादपरायणाः ॥
विद्याविनोदरसिके भूपेन्द्रे सज्जने सति ॥ २८ ॥
प्रतीच्यां दिशि गव्यूतिमिते स्वनगराद्बहिः ॥
अत्युच्चशैलशिखरे प्रासादं साधु यो व्यधात् ॥ २९ ॥

नाम्ना च सज्जनगढो दृश्यते स मनोहरः ।
प्रज्वालितो यत्र दीपश्चित्रकूटाद्विलोक्यते ॥ ३० ॥
राजमार्गांश्च सुबहून् पाठशालास्तथैव च ।
विदधे बहुलान् रम्यान् यश्चिकित्सालयाँस्तथा ॥ ३१ ॥
यन्त्रालयं च रुचिरं स्वनाम्ना सुन्दराक्षरम् ॥
साप्ताहिकं यत्र पत्रं तन्नाम्नाऽद्यापि मुद्र्यते ॥ ३२ ॥
यो जी. सी. एस. आई. तिपदव्या भूषितोऽभवत् ॥
प्रकृत्या शोभते स्वर्णं किमु चेद्रत्नसंयुतम् ॥ ३३ ॥
यः शम्भुसिंहेनाऽऽहूतः श्रीकाशीतो द्विजोत्तमः ॥
विनायक इति ख्यातः सर्वविद्याविचक्षणः ॥ ३४ ॥
स भूपेन्द्रात्प्रजाभ्यश्च स्वविद्यागुणगौरवात् ॥
एधमानामनुदिनं प्रतिष्ठां प्राप भूयसीम् ॥ ३५ ॥
श्रीसज्जननृपो राज्यमत्यल्पं दशवार्षिकम् ॥
पालयन्नपि सत्कीर्त्या दिगन्तानकरोत्सितान् ॥ ३६ ॥
अथालङ्क्रियते सैव मेदपाटवसुन्धरा ॥
श्रीमत्फतहसिंहाख्यैर्धरणीपतिपुङ्गवैः ॥ ३७ ॥
एते परमकारुण्यशालिनो लोकसंस्तुताः ॥
महोत्साहाः शूरवराः प्रजापालनतत्पराः ॥ ३८ ॥
ब्रह्मचर्यव्रतरता मतिमन्तो जितेन्द्रियाः ॥
गोविप्ररक्षणपराः साधुभक्ता अतन्द्रिताः ॥ ३९ ॥
दानशीलाः क्लेशसहाः सत्कर्मनिरताः सदा ॥
आस्तिकप्रवराः प्राज्ञभक्ताः सत्ये दृढव्रताः ॥ ४० ॥

एभिः प्राचीनमर्यादानुगुणं भूमिपालनम् ॥
विधीयते यथायोग्यं धर्ममाश्रित्य सर्वदा ॥ ४१ ॥
नास्ति दस्युकृता भीतिर्न हिंस्रश्वापदोद्भवा ॥
नापि दुर्भिक्षजनिता नृपेष्वेषु प्रशास्तृषु ॥ ४२ ॥
एभिर्धराधिपतिभिर्नाम्नोदयपुरं पुरम् ॥
साधु संस्कृत्य संस्कृत्य दर्शनीयतमं कृतम् ॥ ४३ ॥
चित्रकूटाद्रिदुर्गश्च संस्कृत्य सुदृढीकृतः ॥
तुलादानादिदानानि क्रियन्ते च कृतान्यपि ॥ ४४ ॥
मृगयादत्तचित्तैर्यैः क्रूरान् केसरिणः स्वयम् ॥
बहुशो विनिहत्याऽऽशु नाशितं वनजं भयम् ॥ ४५ ॥
एभिर्महानदो रम्यो नाम्ना फतहसागरः ॥
समीप एव नगराद्विहितो जलपूरितः ॥ ४६ ॥
यस्य कल्लोलनिनदः श्रूयते सागरोपमः ॥
किमु राज्ञो यशः स्तुत्यं स्तौति तारस्वनं मुदा ? ॥४७॥
एभिः स्वराजभवने गृहं सर्वाङ्गसुन्दरम् ॥
स्वाऽऽवासहेतोः फतहनिवासाख्यं कृतं नवम् ॥ ४८ ॥
एभिः कृता चित्रकूटान्निजोदयपुरावधि ॥
बाष्पयानव्यवस्था च जनसौकर्यहेतवे ॥ ४९ ॥
मेदपाटे पाठशालाश्चिकित्साभवनान्यपि ॥
विविधानि च हर्म्याणि तत्र तत्र कृतानि यैः ॥ ५० ॥
येऽत्र जी. सी. एस. आई जी. सी. वी. ओ. तथैवहि ॥
जी. सी. आई. ई. त्युपाधीन्वहन्तो भान्ति भूतले ॥५१॥

एषां सद्गुणसिन्धूनां गुणप्रवचने मम ॥
कथमल्पधियः शक्तिः सफलत्वमवाप्नुयात् ॥ ५२ ॥
एते शतं समाः पूर्णं पुत्रपौत्रधनान्विताः ॥
निरामयाः कीर्तियुता जीवन्त्वित्यर्थये शिवम् ॥ ५३ ॥
श्रीशम्भुसिंहेनाऽऽहूतः काशीतो यो विचक्षणः ॥
श्रीविनायकशास्त्रीति प्रसिद्धः पण्डिताग्रणीः ॥ ५४ ॥
वर्तमाननृपश्रेष्ठराज्यसिंहासनस्थितेः ॥
ज्योतिःशास्त्रोक्तमार्गेण सन्मुहूर्तं स दत्तवान् ॥ ५५ ॥
अब्दे भूवेदनन्देन्दुमिते पौषे सितेतरे ॥
षष्ठ्यां तिथौ मुहूर्तोऽभूद्राज्यसिंहासनस्थितेः ॥ ५६ ॥
कर्म राज्याभिषेकस्य कर्मकाण्डोक्तमार्गतः ॥
अकरोदपि यो वेदपारगैः सद्द्विजैर्युतः ॥ ५७ ॥
अभिषेकोत्तरं यश्च मनुस्मृतिमुखान् बुधः ।
भूपतिं श्रावयामास धर्मग्रन्थाननेकशः ॥ ५८ ॥
सूक्ष्मकालव्यञ्जकानि घटीयन्त्राणि भूरिशः ॥
तत्रतत्र स्थापितानि तेन राजनिदेशतः ॥ ५९ ॥
प्रत्यहं छायया यत्र सति भास्वति भास्वति ॥
अद्यापि तानि समयं सूचयन्ति यथोचितम् ॥ ६० ॥
धर्मशास्त्रव्यवस्थाश्च सम्प्राप्ते धर्मसङ्कटे ॥
प्रदर्श्य विदुषा तेन धर्मः संस्थापितस्तदा ॥ ६१ ॥
संशये निर्णयं ज्ञातुं येऽर्थयन्ति स्म यं यदा ॥
सदुत्तरप्रदानेनाऽतोषयत्ताँस्तदैव सः ॥ ६२ ॥





लोकैस्तदानीं सदसद्विवेकीति विभूषितः ॥
नानासभासु च जनैरधिभूर्विहितश्च यः ॥ ६३ ॥
आर्यविद्यापाठशाला श्रीहरिश्चन्द्रसंस्मृतौ ॥
येन संस्थापिता साऽत्र वरीवर्ति मनोहरा ॥ ६४ ॥
सद्विद्याज्ञानदानेन श्रेष्ठया शिक्षया तथा ॥
सुबहूपकृतं येन जनतायाः समन्ततः ॥ ६५ ॥
सद्विद्यासद्गुणैर्युक्ता महत्स्थानमुपाश्रिताः ॥
विराजन्ते यस्य शिष्याः शतशः श्रेयसा युताः ॥ ६६ ॥
एवंविधानि कर्माणि कुर्वन्नूत्नानि चाऽन्वहम् ॥
मुख्यं निजं पाठशालाऽध्यापनं न जहौ कचित् ॥ ६७ ॥
सुधीरेष स्थितो यत्र तत्र चोपकृतं बहु ।
तद्वर्णनस्याऽप्रसङ्गादिह नैव विलिख्यते ॥ ६८ ॥
किश्वोदयपुरे स्थित्वा विदुषाऽनेन यत्कृतम् ॥
ग्रन्थविस्तारभीत्या तदिच्छीत्रमिह वर्णितम् ॥ ६९ ॥
एवं श्रीशम्भुनृपतिं श्रीसज्जननृपं ततः ॥
श्रीमत्फतहभूपेन्द्रं वर्तमाननृपं ततः ॥७० ॥
संसेव्य विधिवद्भक्त्या तान् संतोष्य च सद्गुणैः ॥
दिने दिने च वर्धिष्णुं राज्यात्संमानमाप्य च ॥ ७१ ॥
अष्टादश समाः कालं यापयित्वा यथासुखम् ॥
अन्ते सन्त्यज्य शालीयं कार्यं तस्थौ दृढव्रतः ॥ ७२ ॥
विश्वेश्वरपदाम्भोजभ्रमरायितमानसः ॥
ततः स काशीमागत्य सुखात्कालमयापयत् ॥ ७३ ॥

श्रीमत्फतहभूपेन्द्रकुमारोऽस्ति महामतिः ॥
श्रीमद्भूपालसिंहाख्यो येनालङ्क्रियते कुलम् ॥ ७४ ॥
अयं दयानिधिर्मानी नीतिज्ञो गुणसागरः ॥
शूरो दानी प्रजाभक्तो गोविप्रप्रतिपालकः ॥ ७५ ॥
पदव्या वर्तमानाङ्ग्लभूमिपालप्रदत्तया ॥
के. सी. आई. ई. ति नाम्न्या भूषितो भाति योऽधुना॥७६॥
वर्तमाननृपश्रेष्ठैर्यौवराज्येऽभिषेचितः ॥
सूक्ष्माणि राजकार्याणि स्वाधिकारानुरूपतः ॥ ७७ ॥
यथान्यायं नीतिधर्मपूर्वं च विदधत्सदा ॥
अत्यल्पेनैव कालेन प्रजानां यः प्रियोऽभवत् ॥ ७८ ॥

शुद्धं यशः समधिगम्य, कुमारतुल्यं
पुत्रं च शौर्यनिलयं, कुलमैश्वर्यश्च ॥
जीयात्कुमार इह वर्षशतं सतात
इत्यर्थना मम परेश्वर एकलिङ्गे ॥ ७९ ॥

दिनकरकुलभूषाभूतभूपेन्द्रवृन्दा-
ऽभिमतफलवदान्यो भूतिमानेकलिङ्गः ॥
जयति यदनुकम्पापात्रतो मेदपाटा-
ऽधिपतय इह शौर्यं दर्शयन्तः प्रसिद्धाः ॥ ८० ॥

इत्युदयान्वयवर्णने खण्डकाव्ये तृतीयखण्डम् ।

---

समाप्तोऽयं ग्रन्थः ।



# उपसंहारः ।

भारद्वाजसुवंशमौक्तिकमणिः श्रीबालकृष्णाभिधः
श्रौतस्मार्तविधावकुण्ठितमतिर्वेतालवंशोद्भवः ॥
श्रीकाश्यामभवन्नृपार्चितपदो यो दाक्षिणात्यो द्विज-
स्तत्सूनुः समभूद्विनायक इति ख्यातो धुरीणः सताम् ॥१॥
यश्च व्याकरणे श्रुतिस्मृतिविधौ धर्मे तथा वैद्यके
न्याये ज्योतिषि तन्त्रमन्त्रविषये विख्यातिमान् पण्डितः ॥
अन्वाधाय च पावकान् मखवरं चाक्षय्यपुण्यप्रदं,
चातुर्मास्यभवं विधाय विधिना यश्चायजन्निर्जरान् ॥ २ ॥
सोऽयं भूपतिशम्भुसिंहसमयाद्राजत्रयीपूजितो
नानाकाव्यकलाविलासिकवितासन्तोषितक्ष्मापतिः ॥
पत्नी तस्य सुवंशजा गुणवती नाम्ना च या रुक्मिणी
सेयं भर्तृनिदेशपालनपरा प्रासूत पुत्रद्वयम् ॥ ३ ॥
तत्र श्रीनाथ इति ज्येष्ठः पुत्रः समाख्यातः ॥
सुमना अनन्तरामस्तदनुजनित्वं प्रकाशयति ॥ ४ ॥
वर्षे नागहयाङ्कभू(१९७८)परिमिते श्रीविक्रमादित्यतो
भाद्रे मास्यसिते दले भृगुदिने जन्माष्टमीपर्वणि ॥
सत्कीर्तेरुदयादिसिंहनृपतेर्वंशस्य संवर्णनं
चेतलो मतिमानचीकरदिदं श्रीनाथशास्त्री द्विजः ॥ ५ ॥
क्वाहं मन्दमनीषो भास्करवंश्याः क्व भूपालाः ॥
केवलमेषां नामस्मरणे नूनं ममोद्देशः ॥ ६ ॥
उदयपुराभिधनगरे मम सम्बन्धो वरीवर्ति ॥
इत्येवोदयसिंहाद्वंशो राज्ञां मयाऽवर्णि ॥७॥ इति शुभम् ॥

# राज्यसमयः ।

| | | | | |
|---|---|---|---|---|
| श्री५मान् | महाराणा | उदयसिंहः | संवत् | १५९७–१६२८ |
| ,, | ,, | प्रतापसिंहः | ,, | १६२८–१६५३ |
| ,, | ,, | अमरसिंहः | ,, | १६५३–१६७६ |
| ,, | ,, | करणसिंहः | ,, | १६७६–१६८४ |
| ,, | ,, | जगतसिंहः | ,, | १६८४–१७१० |
| ,, | ,, | राजसिंहः | ,, | १७१०–१७३७ |
| ,, | ,, | जयसिंहः | ,, | १७३७–१७५६ |
| ,, | ,, | अमरसिंहः | ,, | १७५६–१७६८ |
| ,, | ,, | सङ्ग्रामसिंहः | ,, | १७६८–१७९० |
| ,, | ,, | जगतसिंहः | ,, | १७९०–१८०८ |
| ,, | ,, | प्रतापसिंहः | ,, | १८०८–१८१० |
| ,, | ,, | राजसिंहः | ,, | १८१०–१८१७ |
| ,, | ,, | अरिसिंहः | ,, | १८१७–१८२८ |
| ,, | ,, | हमीरसिंहः | ,, | १८२८–१८३४ |
| ,, | ,, | भीमसिंहः | ,, | १८३४–१८८४ |
| ,, | ,, | जवानसिंहः | ,, | १८८४–१८९५ |
| ,, | ,, | सरदारसिंहः | ,, | १८९५–१८९९ |
| ,, | ,, | स्वरूपसिंहः | ,, | १८९९–१९१८ |
| ,, | ,, | शम्भुसिंहः | ,, | १९१८–१९३१ |
| ,, | ,, | सज्जनसिंहः | ,, | १९३१–१९४१ |
| श्री५मान् | महाराणा | फतहसिंहः | ,, | १९४१ |
| श्री५मान् | कुमारः | भूपालसिंहः | | युवराजः |

# विज्ञापनम्

स्वधर्मधुरन्धर-दैवज्ञवाचस्पति-ज्यो
कै० श्रीविनायकशास्त्रिवेतालनिर्मितानि
याणि पुस्तकानि ।

१. जैमिनिसूत्रं सटीकम् ज्योतिषम् अध्य
२. लघुपाराशरी संस्कृतटीकायुता भाषा
३. पञ्चाङ्गपाटीसंग्रहः भाषाटीकोपेतः
४. एकादशीनिर्णयः भा० टी० युतः
५. ईशावास्योपनिषद् भा० टी० युता
६. वारकुक्षिका

☞ संहैवैतेषां पुस्तकानां प्राप्तिरष्टाणकैरेव भविष्यति ।
प्रापणव्ययस्तु सर्वत्र पृथगेव ।

## ☞ सूचना ☜

श्री ६ मत्पूज्यपितृचरणैरुक्तशास्त्रिभिरेव विनिर्मिता तत्त्वबुभुत्सूनामतीवोपयोगिनो नवीना केकाख्या नीलकण्ठीटीका सदुपपत्त्युदाहरणविशेषैः संवलिता समूला मुद्रयितव्यापि समुचितसाहित्याभावेन कागदमहर्घतया च कालमेतावन्तं न प्रकाशिता । सा च सार्धशतद्वयग्राहकलाभेन शक्येत मुद्रयितुम् । मूल्यंचैतस्याः सार्धैकरूप्यकपरिमितम् । अतस्त्वर्यतामुपयोगिनो ग्रन्थस्यास्य मुद्रणे ग्राहकश्रेण्यां निजनामलेखनानुमतिप्रदानेनेति शम् ।

पुस्तकप्राप्तिस्थानम्—

श्रीनाथशास्त्री वेताल

ढूधविनायक—बनारस सिटी ।